॥ योगशान्तिप्रदं गणाधीशस्तोत्रम् ॥

श्रीगणेशाय नमः ।
कर्दम उवाच ।
केनोपायेन भो वत्स योगशान्तिः प्रलभ्यते ।
तदर्थं पूजनीयं किं तद्वदस्व जनार्दन ॥ १॥

कपिल उवाच ।
गणेशभजनं मुख्यं शान्तियोगप्रदं मतम् ।
योगाकारस्वरूपं तं ब्रह्मेशं भज मानद ॥ २॥

सर्वादिः सर्वपूज्योऽयं सर्वाधारो महामुने ।
य आदिः प्रलयान्ते स तिष्ठति शास्त्रसंमतम् ॥ ३॥

ज्येष्ठराजं गणेशानं वेदेषु प्रवदन्ति तम् ।
गणाः समूहरूपाश्च तेषां स्वामी प्रकथ्यते ॥ ४॥

नानाजगत्स्वरूपं वैदेहरूपं कृतं मुने ।
नानाब्रह्ममयं तेन शिरः कृतं महात्मना ॥ ५॥

यस्माज्जातमिदं यत्र ह्यन्ते गच्छति महामते ।
तद्वेदे गजशब्दाख्यं शिरस्तेन गजाननः ॥ ६॥

त्रिविधं भेदयुक्तं यदखण्डं वै तुरीयकम् ।
तयोर्योगे गणेशोऽयं देहमस्तकयोर्गतः ॥ ७॥

चित्तं पञ्चविधं प्रोक्तं तत्र मोहश्च पञ्चधा ।
मोहरूपा महासिद्धिर्बुद्धिश्च मोहधारका ॥ ८॥

तयोः स्वामी गणाधीशश्चित्ते नित्यं प्रतिष्ठितः ।
चिन्तामणिर्महाभागो लभ्यते योगसेवया ॥ ९॥

पञ्चधा चित्तमुत्सृज्य तदैश्वर्यं तथैव च ।
योगः शान्तिमयः सद्यः प्राप्यते ब्रह्मणस्पतिः ॥ १०॥

तस्मात्तं भज मन्त्रेणैकाक्षरेण महामुने ।
तेन तुष्टो गणेशानो योगं दास्यति शान्तिदम् ॥ ११॥

॥ श्रीगणाधीशस्तोत्रं शिवशक्तिकृतम् ॥

गणाधीशस्तोत्रं शिवशक्तिकृतम् ।
गणाधीशस्तोत्रं शिवशक्तिकृतम् ।
श्रीगणेशाय नमः ।
श्रीशक्तिशिवावूचतुः ।
नमस्ते गणनाथाय गणानां पतये नमः ।
भक्तिप्रियाय देवेश भक्तेभ्यः सुखदायक ॥ १॥

स्वानन्दवासिने तुभ्यं सिद्धिबुद्धिवराय च ।
नाभिशेषाय देवाय ढुण्ढिराजाय  ते नमः ॥ २॥

वरदाभयहस्ताय नमः परशुधारिणे ।
नमस्ते सृणिहस्ताय नाभिशेषाय ते नमः ॥ ३॥

अनामयाय सर्वाय सर्वपूज्याय ते नमः ।
सगुणाय नमस्तुभ्यं ब्रह्मणे निर्गुणाय च ॥ ४॥

ब्रह्मभ्यो ब्रह्मदात्रे  च गजानन नमोऽस्तु ते ।
आदिपूज्याय ज्येष्ठाय ज्येष्ठराजाय ते नमः ॥ ५॥

मात्रे पित्रे च सर्वेषां हेरम्बाय नमो नमः ।
अनादये च विघ्नेश विघ्नकर्त्रे नमो नमः ॥ ६॥

विघ्नहर्त्रे स्वभक्तानां लम्बोदर नमोऽस्तु ते ।
त्वदीयभक्तियोगेन योगीशाः शान्तिमागताः ॥ ७॥

किं स्तुवो योगरूपं तं प्रणमावश्च विघ्नपम् ।
तेन तुष्टो भव स्वामिन्नित्युक्त्वा तं प्रणेमतुः ॥ ८॥

तावुत्थाप्य  गणाधीश उवाच तौ महेश्वरौ ।
श्रीगणेश उवाच ।
भवत्कृतमिदं स्तोत्रं मम भक्तिविवर्धनम् ॥ ९॥

भविष्यति च सौख्यस्य पठते शुण्वते प्रदम् ।
भुक्तिमुक्तिप्रदं चैव पुत्रपौत्रादिकं तथा ॥ १०॥

धनधान्यादिकं सर्वं लभते तेन निश्चितम् ।
इति शिवशक्तिकृतं श्रीगणाधीशस्तोत्रं समाप्तम् ॥